॥ श्रीयादगिरि लक्ष्मीनृसिंह मङ्गळाशासनम् ॥

श्री यादगिरि शृंगाग्र गुहामध्य विहारिणे
सर्वलोकेश्वरायास्तु श्री नृसिंहाय मङ्गळम् ॥ १ ॥

वामाङ्क विलसल्लक्ष्मीबन्धवे लोकबंधवे
सूरिभोग्याय यादाद्रि श्री नृसिंहाय मङ्गळम् ॥ २ ॥

शङ्ख चक्र प्रभामध्य राजद्विमलमूर्तये
श्री यादगिरिवासाय श्री नृसिंहाय मङ्गळम् ॥ ३॥

गुहानिवसनात्सर्व हृद्गुहावास सूचनम्
कुर्वते सर्वलोकानाम् यादाद्रीशाय मङ्गळम् ॥ ४॥

नित्याय निरवद्याय नित्यवैभवशालिने
नित्यवैभव दात्रेच श्री नृसिंहाय मङ्गळम् ॥ ५॥

साधुलोक शरण्याय कामितार्त प्रदायिने
आर्तार्ति हरणायास्तु श्री नृसिंहाय मङ्गळम् ॥ ६॥

भुक्तिमुक्ति प्रदात्रेच शक्ति भक्ति प्रदायिने
निर्वाण सुखरूपाय श्री नृसिंहाय मङ्गळम् ॥ ७॥

जगत्कर्त्रे जगत्भोक्ते जगद्रूपाय वेदसे
जगताञ्च निवासाय यादाद्रीशाय मङ्गळम् ॥ ८॥

अनेक कोटि ब्रह्माण्डैऽ`ः कंदुका क्रीडलीलया
केळीविलासलोलाय श्री नृसिंहाय मङ्गळम् ॥ ९॥

सुरासुर नरानाम् च वानरानाम् च पक्षिनाम्
दीनानाम् रक्षकायास्तु श्री नृसिंहाय मङ्गळम् ॥ १०॥

दुश्टानाम् निग्रहम् चैव् शिष्टानाम् परिपालनम्
युगपत् कुर्वते लक्ष्मीनरसिंहाय मङ्गळम् ॥ ११॥

प्रपञ्च वृक्षबीजाय निष्प्रपञ्चाय मायिने
मायापनोदकायास्तु श्री नृसिंहाय मङ्गळम् ॥ १२॥

संतान दान दीक्षाय संतानाय फलार्तिनाम्
कौसल्या मुख्य संतानरूपिणे शुभमङ्गळम्   ॥ १३॥

मङ्गळम् नरसिंहाय मङ्गळम् गुणसिंधवे
मङ्गळानाम् निवासाय यादाद्रीशाय मङ्गळम्   ॥ १४॥

॥ इति श्री वांगीपुरम् नरसिंहाचार्य विरचितं
श्री यादगिरि लक्ष्मीनृसिंह मङ्गळाशासनम् समाप्तम् ॥